# महालक्ष्म्यष्टकम्

इन्द्र उवाच

नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते
शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते १

नमस्ते गरुडारूढे कोलासुरभयङ्करि
सर्वपापहरे देवि महालक्ष्मि नमोऽस्तु ते २

सर्वज्ञे सर्ववरदे सर्वदुष्टभयङ्करि
सर्वदुःखहरे देवि महालक्ष्मि नमोऽस्तु ते ३

सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि
मन्त्रमूर्ते सदा देवि महालक्ष्मि नमोऽस्तु ते ४

आद्यन्तरहिते देवि आद्यशक्ति महेश्वरि
योगजे योगसम्भूते महालक्ष्मि नमोऽस्तु ते ५

स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदये
महापापहरे देवि महालक्ष्मि नमोऽस्तु ते ६

पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि
परमेशि जगन्मातर्महालक्ष्मि नमोऽस्तु ते ७

श्वेताम्बरधरे देवि नानालङ्कारभूषिते
जगत्स्थिते जगन्मातर्महालक्ष्मि नमोऽस्तु ते ८

महालक्ष्म्यष्टकं स्तोत्रं यः पठेद्भक्तिमान् नरः
सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ९

एककाले पठेन्नित्यं महापापविनाशनम्
द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः १०

त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम्
महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ११

Reference:
Mantrapushpam, (Mumbai: Ramakrishna Math), p. 517.